अच्युतग्रन्थमालाया दशमं प्रसूनम्

विद्वद्वरश्रीरसिकोत्तंसरचितं

# प्रेमपत्तनम्



स्वोपज्ञप्रेमसर्वस्वसमेतम्



प्रकाशनस्थानम्—

अच्युतग्रन्थमालाकार्यालयः, काशी

अच्युतग्रन्थमालाया दशमं प्रसूनम्

विद्वद्वरश्रीरसिकोत्तंसरचितं

# प्रेमपत्तनम्

स्वोपज्ञप्रेमसर्वस्वसमेतम्

काशिकश्रीजोखीराममटरूमल्लगोयनका-संस्कृतमहाविद्यालय-पुस्तकालयाध्यक्षेण अच्युतग्रन्थमालाध्यक्षेण च साहित्याचार्य-

श्रीकृष्णपन्तशास्त्रिणा

सम्पादितम्

प्रकाशनस्थानम्—

अच्युतग्रन्थमालाकार्यालयः, काशी

प्रथमावृत्तिः १५०० ]  सं० १९८९  [ मूल्यम् १)

॥ श्रीः ॥

# भूमिका

गोलोकधामपतये प्रकाशचयमूर्त्तये ।
नमोऽस्तु वासुदेवाय भक्त्यानन्दविवृद्धये ॥

[ स्क० पु० वै० ख० ]

## उपक्रमः

अयि गीर्वाणवाणीप्रणयिनः कृष्णचरणप्रणतिपरायणा मनीषिणः! अच्युतग्रन्थमालाया दशमं प्रसूनं प्रेमपत्तनाभिधमेतदनुत्तमं ग्रन्थरत्नं सम्मुख्यं प्रकाश्यते। नूनं नूत्नमपीदं प्रेमपूरप्रसारप्रवणानि चिरत्नानि ग्रन्थरत्नानि नितरामतिशेते। अतोऽद्यावधि ध्वान्तविलीनमिदं निरस्तद्वेषादिदूषणानां भक्तिभूषणानां करारविन्दयोः सादरमुपहरतामस्माकं प्रीतिरीदृक्तया इयत्तया वा सीमानं नाधिरोहति।

कृतिरियं रतिपतिभक्तावतंसस्य रसिकोत्तंसस्य माध्वगौडीयसम्प्रदायमनुसरति। कोऽयं माध्वगौडीयसम्प्रदायः, कश्चास्य प्रवर्त्तयिता, कुतः सम्प्रदायादस्य समुद्भवः, के मुख्यमुख्या अस्य सिद्धान्ताः—इत्येतत्सम्प्रदायतत्त्वमविदुषां विदुषां स्वान्ते समुल्लसतां सन्देहसन्देहानां समाधिरिह न भवेदप्रकृत इति एतद्विषये किञ्चित्प्रस्तूयते—

गौडीयसम्प्रदायोऽस्ति वङ्गे प्रचुरप्रचारः। अस्यापरं नाम चैतन्यसम्प्रदाय इति। अस्य प्रवर्त्तयितारो भगवन्तश्चैतन्यचन्द्रमहोदयाः १४८५ तमे ईशवीये नवद्वीपं जनुषा विभूषयामासुः। महापुरुषाणाममीषां पितृचरणाः पुण्यपरा जगन्नाथमिश्रनामानः पुरन्दरेत्यपरनाम्नाऽपि प्रथितिमुपगता आसन्। एषां जननी सौशील्येन सौन्दर्येण सौभाग्येन पतिनाम्ना च जयन्तजननीमनुकुर्वाणापि स्वनाम्नापि ताम-

न्वकरोत्। अचरमे वयसि निमाईनाम्ना प्रतीताश्चैतन्यमहोदया गङ्गाधरनाम्नः कस्यचिच्छाब्दिकस्य शालायां शब्दविद्यामनवद्यमन्वशीलयन्। अचिरेणामी लब्धवर्णा व्याकरणे संवृत्ताः। यदाऽऽसन्नमी समासन्नद्वादशवर्षावसितयस्तदैवेषां पितृचरणाः पुरन्दरमहोदयाः पुरन्दरपुरातिथितामुररीचक्रुः। पितृवियोगजेनाभीलकुलेन भृशमाकुला अप्यमी महापुरुषतया स्वाध्यायसमुदयान्नो व्यचलन्। अपि तु सर्वमिमं प्रत्यूहव्यूहं धैर्येण प्रसह्याधिकमनोयोगेनाध्ययने प्रवृत्ता अभूवन्। पितृमृत्योर्वर्षत्रयानन्तरं नवद्वीपनिवासिनो वल्लभाचार्यस्यात्मजया साकमभूदुपयमनमेषाम्। एभिश्चिरमन्तेवसन्तो विद्यां लम्भिताः। न्यायदर्शनस्यैका वृत्तिरपि विरचिता, परं सा नेदानीमुपलभ्यते। एत एव महानुभावाः सन्ति गौडीयसम्प्रदायस्य प्रवर्त्तयितारः, न खलु प्रवर्त्तयितार एव, अपि तूपास्यदेवा अपि। साम्प्रदायोऽसौ माध्वसम्प्रदायानुसारी माध्वसम्प्रदायादेषां सम्प्रदाये नास्ति कोऽपि विशेषो भेदः। माध्वसम्प्रदाये नव सिद्धान्ताः प्रसिद्धाः सन्ति, तेषु षट् तु अविकला एव स्वीकृताः। अवशिष्टानां त्रयाणां परिष्कारो महानुभावैरेभिर्विहित इति विश्रुतचरम्। अत एतत्सम्प्रदायदिगपि संक्षेपेणात्र प्रदर्श्यते—

## मध्वाचार्यमतदिशा

मध्वाचार्यवर्य्याः ११ शततमे ईशवीयेऽवनिमण्डलमलञ्चक्रुः। महामहिमशालिभिस्तैरनेके मठाः प्रतिष्ठापिताः ३७ ग्रन्थाश्चारचितास्तेषु ऋग्भाष्यादयः परां प्रथितिमुपगताः। मध्वाचार्यवर्य्याणां संक्षेपेणायमस्ति मतवादः—तेषां मतेऽस्ति नारायण एव सकलकारणकारणम्, सगुणः सविशेषश्च। जीवोऽणुपरिमाणो भगवतो दासः। वेदा नित्या अपौरुषेयाः। पञ्चरात्राध्ययनं जीवस्य परमावश्यकम्। ते कथयन्ति जगदस्ति तत्त्वतस्तथ्यम्, नेदं मरुमरीचिकेव, गगनमालिनिमेव, शुक्तिरजतमिव भ्रान्तिकलितम्। एषां मते पदार्थौ द्विधा स्वतन्त्रोऽस्वतन्त्रश्च। अशेषसद्गुणसमवेतो भगवान् स्वतन्त्रतः पदार्थः।

जीवो जडं जगच्च अस्वतन्त्रं तत्त्वम्। जीवपरमात्मनोः, जीवयोः, परमात्मजगतोः, जीवजगतोश्चास्ति परस्परं भेदः। सन्ति तेषामत्रामी दृष्टान्ताः—

यथापक्षी च सूत्रञ्च नानावृक्षरसा यथा।
यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा॥
चौरापहार्यौ च यथा यथा पुंविषया अपि।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ॥
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा।
ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः॥
लक्ष्मीरक्षरदेहत्वादक्षराऽतः परो हरिः।
स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः॥
निःसीमत्वेन ते सर्वे तद्वशाः सर्वदेवताः।
विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः॥
निर्दुःखानन्दभुङ् नित्यं तत्समीपे स मोदते।

इत्यादि महोपनिषदि द्रष्टव्यम्।

अत एव मध्वाचार्याः सर्वथा द्वैतवादिन उच्यन्ते। एषां मते जीवो भगवतो दास इत्युक्तपूर्वम्। ते कथयन्ति दासो यदि प्रभोः समानकक्षामङ्गीकुर्यात्तदा प्रभुस्तं दण्डयेत्। तथैव जीवो यदि 'अहं ब्रह्मास्मीति' भावमङ्गीकृत्य सकलकारणकारणेन नारायणेन सहात्मनोऽभेदभावनां विदध्यात्, तदा भगवान् तमधो नयति। तेषां मते निर्वाणमुक्तिस्तु शशशृङ्गमिवालीककथा। नारायणस्योत्कर्षज्ञानेन तस्मिन्ननन्या भक्त्या च सारूप्यसालोक्यादयो मुक्तयो भवितुमर्हन्ति। स्वतन्त्रस्य सेव्यस्य भगवतः प्रसादोपलब्धिरेवास्वतन्त्रस्य सेवकस्य जीवस्य चरमः पुरुषार्थः। भगवतो गुणोत्कर्षज्ञानमन्तरेण परमपुरुषार्थलाभो दुर्लभः। 'तत्त्वमसि' इत्यादिश्रुतिमौलिवाक्यश्रवणजेन ज्ञानेन तत्प्राप्तिरतीव दुःशका। केवलयोपासनयैव तत्प्राप्तिर्भवितुमर्हति। 'तत्त्वमसि' इत्यादिवाक्यानि तु अग्निर्माणवक इत्यादिवत् सादृश्यबोधकानि।

उपासना तावत्त्रिविधा—अङ्कननामकरणभजनभेदेन । अङ्कनं नाम शङ्खचक्रादिभिर्देहस्य लाञ्छनम् । नामकरणम्—नारायणनामानुसारिस्वसुतादेराख्याकरणम् । भजनं दशधा । तत्र मानसिकम्—दया, श्रद्धा, नारायणानुग्रहलाभः । वाचिकम्—तथ्यवचनम्, हितकथा, प्रियवचनम्, स्वाध्यायः । कायिकम्—दानम्, परिरक्षणम्, देवपूजनम्, इति । एतदेव सम्प्रदायमिममनुसरतां विपश्चितामपश्चिमं लक्ष्यम् । ततो नापरं कर्त्तव्यमवशिष्यते तेषाम् ।

ते समामनन्ति गुणातीतो नारायणो मायासम्प्रयोगेण त्रिगुणमयानि ब्रह्मविष्णुमहेश्वररूपाणि उररीकृत्य सर्गस्थितिप्रलयान् विदधाति । जीवान् कर्मानुसारेणोच्चावचा योनीर्ददाति । प्रत्यक्षानुमानशब्दा एषां मते प्रमाणानि । निर्विकल्पकं ज्ञानं नामी मन्यन्ते, एषैव भित्तिरेषां मतस्य । यत्र नास्ति ज्ञानस्य निर्विकल्पकत्वं तत्र विषयस्यावश्यं सत्यत्वम् । अतोऽमीषां मते जगत् सत् । ज्ञेयस्यासत्यतायां ज्ञानस्य स्फूर्तिरेव न भवितुमर्हतीति ते मन्यन्ते ॥

अत्रायमस्ति संग्रहश्लोकोऽपि—

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत् तत्त्वतो
भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥

## चैतन्यमतसंक्षेपः

चैतन्यसम्प्रदायस्यामी सन्ति संक्षिप्ताः सिद्धान्ताः उपदेशाश्च—

भगवान् व्रजेन्द्रनन्दनोऽस्ति एषां परमोपास्यो देवः । गोपीमण्डलमण्डितं वृन्दावनमस्ति धाममूर्धन्यं सत्तीर्थम् । गोपीवर्गेण भगवतो या कल्पिता प्रेममयी काचिदुपासना सैवास्ति श्रेयसी सपर्य्या । श्रीमद्भागवतमेवास्ति परमं प्रमाणम् । भगवति नन्दनन्दनेऽमन्दानन्दकन्देऽनन्यप्रेमैवास्ति परः पुरुषार्थः ।

इष्टदेवे देवकीनन्दने निरतिशयप्रेमोत्पादनं मनसा, वचसा, कर्मणा तदनुगमनञ्च भजनमभिधीयते।

सन्ति भजनस्य तिस्रो विधाः—साधनभक्तिः, भावभक्तिः, प्रेमभक्तिरिति।

संसारेऽस्मिन्नसारे परमं दुरापं मनुजजनुश्चतुरशीतिलक्ष-योनीः परिभ्रम्य—केनापि भागधेयसहायेनाधिगम्यते। तदुपलभ्य यैरिन्द्रियचयः परमपुरुषचरणारविन्दे मकरन्देऽलिसन्दोह इव संयोजितः, तेषामेव जनिः सफला, त एव धन्यतमाः।

निष्कामया भक्त्यैव भगवत्प्राप्तिः सुलभा, नान्यैस्तपोदानज्ञा-नादिभिरनल्पैः।

नास्तिकानां*सम्पर्कः, कुशिष्यकुमित्रादेर्ग्रहः, भगवद्भक्तावतंसैः सत्रा वार्तायां व्यवहारे च किमपि स्खलनम्, आलस्यवश्यत्वम्, निन्दितानां वृत्तानामत्यागः, परनिन्दनम्, शोकवशवर्त्तित्वम्, जीवनिहननम्, कलहः, परदाराभिमर्शनम्, अहङ्कारः, भगवत्सेवायामरतिः, भगवन्महिम्नि अर्थवादोऽयमिति मतिः, असद्देशेऽसमये वा इष्टमन्त्रोच्चारणम्, भगवन्नाम्नः केनाप्यन्येन पदार्थेन सन्तुलनम्, भगवन्निन्दाकर्णनं तत्समर्थनं वा सन्ति गरीयांसः पांसवः। एभ्यो नित्यं वैष्णवैर्विमुक्तैर्भाव्यम्।

प्रथमं भगवद्भक्तौ श्रद्धा, ततः सतां सङ्गः, ततो भगवत्सपर्य्या, ततोऽन्तरायसमुदायहानिः, तदनन्तरं निष्ठारुचिः, अनुपदं भावोदयः, तदनन्तरमुदेति प्रेमभक्तिः सैव पराकाष्ठा, परः पुरुषार्थः।

भगवान् व्रजेन्द्रसूनुरेव केवलमुपास्यः, परमन्येषां परिचर्य्याविधिर्न निन्द्यः।

---

* बहिर्मुखानां संगेन तच्छास्त्रश्रवणेन च। शास्त्राभ्यासेन बहुनाऽसजातीयातिसङ्गतः। अपि सत्तीर्थशिष्याणां रुध्यते प्रेमपद्धतिः॥

[ प्रे० टीका पृ० २० ]

विशुद्धः प्रेमैवास्ति परो धर्मः। कृष्णप्रेमैव विशुद्धः प्रेमा। प्रेमैव फलभक्तिपदेन व्यवह्रियते।

भक्तेः प्रोन्नतिरेव कृष्णभक्तानामचरमं कर्म। सेवायां रतौ रसिकैः साकं मधुरभागवतरसास्वादे नामसंकीर्त्तने च येषां यदाभिरुचिर्भवेत्, ते तदैव धन्यतमाः।

रसोऽत्रानन्द एव। स च द्विविधश्चिदानन्दो जडानन्दश्चेति। चिदानन्द एव परो विशुद्धो निष्कामश्च भगवत्प्रेमा। जडानन्दस्तु तस्यैव प्रेमाकरस्य विकारोऽणोरपि अणीयानंशरूपः। स एव लोके दाम्पत्यप्रणयापत्यप्रेमसखिसौहार्दादिरूपेण प्रचरति।

सर्वे जनाः प्रेमभक्त्यधिकारिणो भवितुमर्हन्ति। प्रेमभक्तिमन्तरेण भगवतः साक्षात्कारोऽसम्भव एव। भाववशो हि भगवान्। स च भावः शान्त-दास्य-सख्य-वात्सल्य-मधुरभेदेन पञ्चविधः। मधुरभावस्यैवापरं नाम कान्ताभाव इति। उपासनायां परिपूर्णायां भवति भावानाममीषामुदयः। मधुरभावो कान्ताभावो वा समस्ति समेष्वेषु श्रेयान्। यथा पतिव्रतपरायणा नारी पतिचरणयोः निष्काममात्मसर्पणं करोति। तथैव भगवच्चरणेषु भक्तस्यात्मसमर्पणमस्ति श्रेयसां पन्थाः। अनेन अन्ये भावा अञ्जसा समुपलभ्यन्तेऽत एव कान्ताभावस्य श्रैष्ठ्यमभिधीयते।

प्रथमं साधनभक्त्या भावभक्तिरुदेति, ततः प्रेमभक्तिस्तस्यैवापरमभिधानं रतिरिति [ पञ्चमपुमर्थः ] सा केवलं चिन्मयावस्थायामेवोद्भवति।

केवलया कृष्णकृपयैव रतिरुदेति, सतां सङ्गेन सा पुष्यति, स्वेदकम्पादयो विद्यन्ते तस्याः परिचायकाः। रतेः सन्ति चत्वारो भेदाः (१) भागवती रतिः (२) छायारतिः (३) जडरतिः (४) कपटरतिरिति। प्रथमोक्तस्वरूपा। भगवद्रतेः प्रथमावस्थास्ति छायारतिः। मद्यवाराङ्गनाद्यासक्तानां या रतिः, सा जडरतिरस्ति। जनान् दर्शयितुमेव दम्भेन न खलु हृदयेन या प्रीतिः क्रिया, सा कपटरतिरिति।

केचन वैष्णवा वैष्णवधर्ममेव श्रेयांसं मन्यमाना अन्यधर्मानधिक्षिपन्ति, केचन वैष्णवचिह्नानि दधाना अपि न वैष्णवधर्ममनुतिष्ठन्ति, केचन वैष्णववंशे गृहीतजन्मानोऽपि अभक्ताः सन्ति, एते सन्ति वैष्णवसमाः। परं वस्तुतो नैते वैष्णवाः। वैष्णवैरेव साकं रसालापो विधेयो नान्यैः।

हरिनामश्रवणेनैव पापानि नश्यन्ति, शरीरं पूतं भवति। यत्र नास्ति कापि आशङ्का तत्र मुहुर्मुहुरुच्चैर्हरिनाम कीर्त्तनीयम्। अनेन शरीरं पूयते, चित्तं भगवद्भक्तिप्रवणं भवति। चित्ते भगवद्भक्तिप्रवणेऽमित्राण्यपि मित्रतां यान्ति, दुःखं च निश्शेषीभवति।

अन्तःकरणशोधनं शमः, बाह्येन्द्रियवशीकारो दमः, शीतोष्णदुःखादिसहिष्णुता तितिक्षा, नश्वरेषु समेषु वस्तुषु हेयबुद्धिर्वैराग्यम्—एतानि प्रधानानि वैष्णवधर्माणि। श्रद्धा-सत्सङ्ग-भजन-निवृत्तिभिरुत्पन्नायां भगवद्रतौ वैष्णवानां हृदये समुत्पद्यते कोऽपि धर्मः, यं विरक्तिपदेनाभिदधति तद्विदः। तदा ते कौपीनमात्रवसनाः कन्दमूलाशना निरशना वा—

क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्
हसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलमन्त्यजम्
भवन्ति तूष्णीं परमेत्य निर्वृताः॥

एष एव वैष्णवानां परो धर्मः।

गृहिणो वैष्णवाः कामनां तत्फलाभिषङ्गं च दुःखदं विज्ञाय सप्रीति निष्कामं भगवद्भजनं कुर्युः। एतदेव वैष्णवगृहिणां कर्म।

जातायां विरक्तौ जनः कौपीनावशेषं वेषमङ्गीकृत्य विहायाश्रमवर्णधर्मान् गुणातीतो परमहंसवृत्तिः वैष्णवाश्रममाश्रयेत्। शीतलतैव सलिलस्य, दाहकतेवानलस्य हिंस्रवृत्तिरिव पशोः मनुजस्य भगवति विशुद्धप्रेमोत्पादनमस्ति स्वाभाविको धर्मः।

संसारसर्पदष्टानां भगवन्नाम जीवातुरूपम्। सत्ये तपसा, त्रेतायां ध्यानेन, द्वापरे यज्ञेन, कलौ केवलेन नामसंकीर्त्तनेन* भवति परमात्मप्राप्तिः।

येषां भक्तावतंसानां वदनारविन्दे हरिरित्यक्षरद्वयं सततं विद्यते, तेषां नास्ति कस्यापि तीर्थस्य यज्ञादेर्वावश्यकता। अनेकानि शास्त्राण्यालोच्य विद्वद्भिरिदमेव निश्चितं यन्नारायणपरायणीभूय नारायणध्यानमेवास्ति परं श्रेय इति।

हरिनामाग्निरेव पुनर्जन्महेतुभूतानि पापबीजानि भर्जते, शुल्बमध्यस्थितोऽणुरपि दावाग्निर्मन्दमन्देनापि वायुना ध्मायमानो यथा सकलमपि विपिनं भस्मसात्करोति, तथैव मानसावासो भगवानपि निखिलान् पापपुञ्जान् नाशयति।

संसारे समेऽपि स्वस्वकर्मानुरूपं फलं भुञ्जते, परन्तु भर्जितानि धान्यबीजानि यथाङ्कुरोत्पादने न क्षमाणि तथा वैष्णवानां कर्माण्यपि पापाङ्कुरमुत्पादयितुं न क्षमन्ते। भक्तवत्सलो भगवान् तेषां कर्मफलानि प्रथमत एव नाशयति।

एत एव चैतन्यदेवस्य संक्षिप्ता हितोपदेशा राद्धान्ताश्च। अत्रायमस्ति श्लोकोऽपि—

आराध्यो भगवान् व्रजेन्द्रतनयः सद्धाम वृन्दावनम्।
रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता॥
श्रीमद्भागवतं प्रमाणममलं प्रेमा पुमर्थो महान्।
श्रीचैतन्यमहाप्रभोर्मतमिदं तत्राऽऽदरो नः परः॥

## प्रेमपत्तनकथांशः

अस्य कथांशस्तावदित्थमुपवर्णितोऽलौकिकवर्णनाचणेर्न भक्तावतंसेन रसिकोत्तंसेन—नैकशिरोमन्दिरं प्रेमपत्तनं नाम पत्तनं विल-

* हरेर्नामैव नामैव नामैव मम जीवनम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥

सति गगनमण्डले*। तस्यास्ति परिवृढो भक्तैर्दृढं परिगृहीतोऽमन्दानन्दकन्दं भगवान् नन्दनन्दनो मुकुन्दः। तस्य वर्तते मतिरती द्वे युवती। तयोर्ललनाललामभूता युवतिरत्नं रतिरस्ति लोकोत्तरलावण्यपूरपूर्णा प्रेमाकररूपा ह्लादिनीसारसंविद् श्रीराधैव। मतिस्तु भगवतः परपुरुषस्यैश्वर्य्यानुसन्धानरूपा या ज्ञप्तिपदेनापि वेद्यते। रतेर्लावण्यातिशयकर्षितचेतसा भगवता शृङ्गारमूर्तिना मतिर्नातितरामादृता, अपि तु वचनादिना अवमानिता च। माधुर्यरूपया† भगवत्तया भृशमावर्जितो भगवान् ऐश्वर्यरूपां तां नातितरामादृतवानिति

* अत्यूर्ध्वमपि वैकुण्ठात् पञ्चाशत्कोटियोजनम्।
शून्ये स्थितं निराधारं ध्रुवमेवेश्वरेच्छया॥
नित्यं वृन्दावनं नाम रहस्यं परमं पदम्। [पद्मपु० पातालख०]

† अथैश्वर्यरूपा माधुर्य्यरूपा चेति भगवत्ताया द्वैविध्यात् तद्विषययोर्ज्ञानभक्त्योर्द्वैविध्यं प्रदर्श्यते। तत्रैश्वर्य्यम्—नरलीलामनपेक्ष्य पारमैश्वर्याविर्भावः। यथा पितरौ प्रत्यैश्वर्यं प्रदर्श्य "एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे। नान्यथामद्भवं ज्ञानं मर्त्यलिङ्गेन जायते"॥ यथा चार्जुनं प्रति—'पश्य मे योगमैश्वरम्' इति। माधुर्य्यन्तु पारमैश्वर्य्यस्य प्रकाशने चाप्रकाशने च नरलीलानतिक्रमः। यथा पूतनाप्राणहर्तृत्वे स्तनचूषणरूपनरबालकचेष्टत्वम्, यथा चातिकठोरशकटोत्पातनेऽप्यतिकोमलाङ्घ्रिदलहतिसिद्धत्वम्, अतिदीर्घदामाशक्यबन्धेऽपि मातृभीतिवैक्लव्यम्, ब्रह्मादिमोहनेऽपि अतिसार्वज्ञेऽपि वत्सचारणलीलत्वम्। पारमैश्वर्ये सत्यपि तस्याप्रकाशनेन दधिपयःस्तेयव्रजस्त्रीजनलोलुपत्वादि।—अथैश्वर्यज्ञानं पारमैश्वर्यानुसन्धौ सति हृत्कम्पहेतुना सादरसम्भ्रमेण स्वभावशैथिल्यकृद्धर्मविशेषः। यथा—

"युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ॥ इति, यथा च—'सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण! हे यादव! हे सखेति! इत्यादि। इह वात्सल्यसख्यात्मकस्वभावशैथिल्यम्। माधुर्य्यज्ञानं तु पारमैश्वर्यानुसन्धानेऽपि हृत्कम्पहेतुसम्भ्रमलवस्याप्यनुदयात् स्वभावातिस्थैर्यकृद् धर्मविशेषः। यथा—त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः। उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम्॥

हृदयम्। न खलु तेनैवैकेन, किन्तु वशीकृतदयितया रत्यापि भृशं कदर्थिता। विज्ञमौलिमणिः सा पितृसदनसरणिमेव कष्टाकूपारोत्तारतरणिमाकलय्य विहाय कान्तस्य निशान्तं जातेऽनादरे इत्थं प्रतिविधेयमिति निखिलान् शिक्षयन्तीव प्राणेभ्योऽपि गरीयसीं सुतामपि शान्तिं त्यक्त्वा तातालयमगच्छत्। अस्ति मतेर्जनकं तावच्छास्त्रमेव, शास्त्रत एव मतेरुत्पत्तेः। तच्च जन्मत एव धनसम्पदादिषु वैराग्यमादधाति। सुतामागतां विलोक्य तामाम्नायाध्यायपटुभिर्बटुभिः साकं भिक्षामटेति समाम्नासीत्। अहह या जातुचित् सकललोकैकस्वामिनः सहचरी आसीत्, सैवेदानीं दैवदुर्विलसिताद् वनं वनमटति नाधिगच्छति चानन्दलवम्।

वन्दिनस्तमुपदेवगणा ये गीतवाद्यबलिभिः परिवव्रुः। वन्द्यमानचरणः पथि वृद्धैः। इत्यादि। इह पारमैश्वर्यानुसन्धानेऽपि वात्सल्योज्ज्वलाख्यस्वभावाशैथिल्यम्।

माधुर्यनिष्ठानामैश्वर्यज्ञानं त्रिवेण्यां सारस्वतप्रवाहवद् गौणतयास्ति, हृत्कम्पहेतोः सादरसम्भ्रमस्याभावात्। न च तद् भावसङ्कोचकृत् प्रत्युत तत्पोष्येव मत्सुतो मत्सखो मत्प्रियो वा सर्वेश्वर इत्युल्लाससम्भवात्। इत्यादि सिद्धान्तरत्ने प्रष्टव्यम्।

'मोहि जो ईश्वर माने आपन पै हीन।
ताके प्रेमवश मैं ना होत हूँ अधीन॥
मोहि जो जो भक्त भजै जोइ जोइ भाव।
ताहि सो सो भाव भजूं यो मेरो स्वभाव॥
मेरे पुत्र मेरे सखा मेरे प्राणपति।
याहि भाव जोहि मोसे करे शुद्ध भक्ति॥
आपुनपो बड़ो माने मोहि सम हीन।
ताहि भाव होत हूँ मैं ताहि को आधीन॥
प्रिया जब मानकर करत भर्त्सन।
वेद स्तुतिहू से हरै सोई मेरो मन॥

इत्यादिहिन्दीपद्यपरिवर्तिते चैतन्यचरितामृते च द्रष्टव्यम्।

शान्तखान्ताभिधेन केनापि ऋषिणा परिणीता तावत् शान्तिर्नाम मतेर्दुहिता। पितृमन्दिरं मातृरहितं विज्ञाय आभीलकुलाकुला सापत्या सापि निजाश्रमं पत्या नीता।

इत्थं निष्क्रान्तायां सापत्यायां मतौ तदधिकृतं गृहनगरारामादीनां निखिलमधिकारजातं पत्या शृङ्गारमूर्तिना भगवता रतये समर्पितम्। मतिकृत्येषु प्रथमत एव सासूया रतिः सर्वमपि व्यवहारमाचूलमूलं परिवर्तयामास। अमात्यो हि राजस्य प्रथमः स्तम्भः। नृपतिहितैषिणं मन्त्रिणमन्तरेण नैवास्ति नृपतेरभिलषितसिद्धिरिति तया मतिव्यापारितमपारमतिं मन्त्रिणमपाकृत्य नरपतिहितेहिताभिख्यो भरतो नाम अभिनवः सचिवः प्रतिष्ठापितः। पुरातनस्य पुरोधसः स्थाने शृंगारोचितधर्मकर्मकलापमर्मकुशलः प्रचुरमन्त्रबलः कामशास्त्रप्रणेता व्यात्स्यायनमुनिर्नियुक्तः। नृपतेस्तन्नगरस्य तदधिवसतां जनानां तेषामुपकरणानां च प्रसाधने पटीयान् शिल्पिवृन्दवन्द्यचरणयुगलोऽनवद्यरचनाकुशलो भूपालेन तेनापूर्वनगरनिर्माणायाऽऽज्ञप्तस्तदाज्ञामजस्रमनुपालयन्नास्तेऽद्भुतो नाम शिल्पिप्रवरः। समुचितमेवेदं यद् शृङ्गारस्याद्भुतेन प्रसाधनम्। तयोः परस्परं मित्रत्वात्। अद्भुतेन तेन नृपतिनिर्देशमङ्गीकृत्य प्रथमं तस्य नगरस्य सुपर्वपर्वताकारो ललितः प्राकारः श्रुतीतिवृत्तपुरावृत्तसंहितादिशास्त्राणां वादजल्पवितण्डादिरूपैः कर्कशतर्करूपैश्च रत्नशकलैर्निर्मितः। प्रोन्नतः स विविधसिद्धान्तरूपाभिरनलयन्त्रावलिभिर्वलितो रसारातिभिर्द्विविधर्मीमांसकैरजितः, आम्नायाद्यर्थतर्कादिचातुर्य्यचाकचिक्यावलोकनेनैव तन्नगरमस्माभिर्दृष्टमिति तावतैव कृतकृत्यम्मन्यैः पण्डितम्मन्यैः सभाजितः सर्वतो नगरं विराजते। श्रोत्रिया ऐतिहासिकाः पौराणिका दार्शनिकाश्च आगमाद्यर्थतर्कादिचातुर्य्यचाकचिक्यावलोकनेनैव आनन्दिताः तत्सिद्धान्तानलयन्त्रदर्शनेनैव तन्नगरं दृष्टमस्माभिरिति कृतकृत्यम्मन्याः तन्नगरं दूरादेव स्तुवन्तो वहिरेव तिष्ठन्ति। न तु नगरान्तर्गन्तुं शक्नुवन्ति। क्व पुनस्तत्र सन्तं भगवन्तमिति भावः। प्रचुरारुणम-

णिशकलरचितानेकोन्नतशिखरनिकरशेखरशतसुन्दरं पुरन्दरपुरद्वार-विडम्बनैकचतुरं रागामरमहीरुङ्कुरमिव मनोरमं रागानुगमनं नाम गोपुरमारचितं तेनैवाद्भुतेन। तद्द्वारेणैव भवति केषांचिदेव भक्तप्रवराणां तत्र प्रवेशः। तं नगरप्राकारं परितो गभीरनीर-निचिता भूरिविस्ताराऽतिदुस्तरास्ति परिखा। यत्र जनानां स्वान्त-स्थमनाविलत्वमाविलत्वञ्च वचनविलोकनैरेव ज्ञायते। भगवद्भक्ति-विशुद्धान्तःकरणा एव तां तरीतुं शक्नुवन्ति नेतरे। परिखामण्डलस्य समन्ताद् अमुनैव शिल्पिना विरचितमारामकुलम्। यत्र नल्लदम-यन्तीमालतीमाधवादिवर्णनात्मिकाभिर्लौकिककवितारूपाभिर्लतारूपा-भिर्नारीभिरिव नरा आलङ्गिताः सन्त्यनेकेऽङ्कुरिताः कोरकिताः कुसु-मिताः फलिताश्च तरवः। अरविन्दमरन्दविन्दुसन्दोहमन्दो वहलपरि-मललब्धेन्दिन्दिरानुगतः कलितकलिन्दकन्याजलकणोऽनिलश्च निरतं वहन् शाखिनाममीषां शाखा आन्दोलयति। लौकिकसत्कविविरचित-कवितामयकाव्यनाटकादिरूपं परिखावलयापरतीरस्थमुपवनमुप-गतानां तत्रैवातिप्रीतिजुषां तन्माधुर्यानुभवेनैवाह्लादितानां कृतकृत्य-म्मन्यानां परिखाप्रकारादिदर्शनेऽप्यलब्धावसराणां नगरान्तर्गमने-क्वाऽवकाशः। तस्य नगरस्य वहिर्भागस्येयं कथा। आभ्यन्तभागस्तु तस्येत्थमुपवर्णितः—पत्तनस्य तस्याभ्यन्तरभूमिर्विविधारुणद्रव्यैर-रुणिमानमानीता। क्वचित् कुङ्कुमक्षोदैः, क्वचित्केसरनिकरैः, क्वचित् विविधप्रसूनपरागैः दलैः पल्लवैश्च, क्वचिद् वृन्दावनावतंसानां गोपीक-दम्बकानां लाक्षारुणैश्चरणैः कृष्णानुरागरञ्जितैर्हृदयैश्च अन्यैश्च क्रीडोपयोगिभिः विविधरङ्गैः। तत्र वर्तमानानि उदवसितानि वहिरन्तश्च पद्मरागशकलैः कलधौतपङ्केन च रचितानि समान्येवातिललितानि सन्ति। तेषु विशालविद्रुमशकलघटिता कलधौतकीलजटिता सर्व-त्रैव विराजते विकटा कपाटपटली। तत्र नगरे सद्मशिखरोपरिस्थि-तानां कलधौतकलशानां मूर्द्ध्नि स्थिता पताकावली स्वर्णरसरञ्जितेव शोभते। मध्येनगरं सदयितस्य मधुरमेचकस्य राज्ञो मुदां मूलमाचू-

लमरुणिमानमुपगतं नैश्रेयसाकरं नाम सन्ध्याघनोपमं घनमुपवनं विभाति। सर्वे एव तन्नगरनिवासिनस्तेनैवाद्भुतेन अनुरागरसरञ्जितमनसः कुसुमकुङ्कुमरागरञ्जितवाससश्च कृताः। तस्मिन् पत्तने न केवलं मनुष्या अपि तु शकुनयोऽपि उभयथाऽरुणतामुपगताः। अहो का कथान्येषां नीरक्षीरविवेकवित्तो राजहंसोऽपि कोकनदच्छविमाश्रयति मनसा वपुषा च। तस्मिन् पत्तने शृङ्गारमूर्त्तेर्भगवतो मित्रतया युद्धवीरधर्मवीरहासनामानो भूपोपमन्त्रिणो रत्यैव नियुक्ताः।

यूनोरद्वैतप्रतिपादकयोः सहःसहस्ययोः सदैव तत्र स्थितीरत्यैवाङ्गीकृता, तत्र शीताधिक्यात् सतोस्तयोर्युवानौ न जातुचित् वियुज्येते। ग्रीष्मभानपूर्वानुरागा वियोगप्रयोजका यूनोरिति तेषां नास्ति तत्र प्रचुरः प्रचारः। वसन्तवर्षाशरदां भेदाभेदप्रयोजकानां वर्तत एव तत्र स्थितिः। प्रेमभक्तिप्रवर्त्तकस्तपस्योऽपि तत्रास्त्येव। रतेः प्रेमप्रणयस्नेहमानादयो दश पुत्रा उत्तरोत्तरं ज्येष्ठा बभूवुः। शृङ्गारमूर्तेर्भूपस्य परिपन्थिनो रौद्रकरुणवीभत्सभयानका नगरान्तिकमपि नायान्ति। भागवतं मर्यादामयतया स्थितं राज्ञः शासनं स्थिरीकृत्य तत्पुरं पालयति। अभ्यस्तशास्त्रो नाम सेनापतिर्निरन्तरं नगराद्बहिरेव परिभ्रमति न नगरान्तिकमायाति। दृग्दर्शनवचनाभिज्ञनामानौ परस्वान्तवृत्तान्ताभिज्ञौ परीक्षकौ रत्यैव नियोजितौ। दुर्दृष्टदुराग्रहदुर्वैराज्ञदुःसंज्ञनामानो गोपुरबहिःप्रदेशस्थाः सन्ति चत्वारः प्रतीहारा रत्यैव व्यापारिताः, उक्तपरीक्षकद्वयपरीक्षितानेव जनान्* नगरान्तर्गन्तुमादिशन्ति। इत्थं सम्पन्ने नगररचनादिवैपरीत्ये प्रथमतो

---

* अहं नारायणोऽनन्तो ब्रह्मा विष्णुर्महाविराट्।
धर्मः क्षुद्रविराट्संघो गङ्गा लक्ष्मीः सरस्वती॥
त्वं विष्णुमाया सावित्री तुलसी च गणेश्वरः।
सनत्कुमारः स्कन्धश्च नरनारायणावृषी॥
कपिलो दक्षिणा यज्ञो ब्रह्मपुत्राश्च योगिनः।
पवनो वरुणश्चेन्द्रः सूर्यो रुद्रो हुताशनः॥

मतिस्थिरीकृते विशेषव्यवहारेऽपि रतिर्वैपरीत्यमन्वतिष्ठत् । यावन्मतिरासीत् तया निगमगोचरो धर्म उररीकृत आसीत् । निष्काशितायां तस्यां ह्लादिनीसारसर्विद्रूपया रत्या धर्मत्वेन य पन्थाः पुरा आदृत आसीत्ततो विपरीतमेवायनमाविष्कृतम् । अधर्मो धर्मत्वेन आदृतः, अनाचार आचारत्वेन, असत्यं सत्यत्वेन, असन्तोषः सन्तोषत्वेन अनादर आदरत्वेन, अविनयो विनयत्वेन, किं वहुना निखिलोऽपिव्यवहारविसरो वैपरीत्यं नीतः । यत्रानलङ्कृतिरेवालङ्कृतिः, स्त्रिय एव पुरुषाः, पुरुषा एव स्त्रियः, ज्ञानमेवाज्ञानम् , सुखमेव दुःखम् , दुःखमेव सुखम् , निकृष्टत्वमेवोत्कृष्टत्वम्, तम एव प्रकाशः, निषेध एव विधिः, अनुत्तरमेवोत्तरम् , अशिरस एव सहस्रशिरसः, अचक्षुष एव सहस्रचक्षुषः, अबाहव एव सहस्रबाहवः, अपद एव सहस्रपदः अनिद्रितत्वमेव सनिद्रितत्वं, वियोग एव संयोगः, संयोग एव वियोगः, मरणमेव जीवनम् , जीवनमेव मरणम् , लघुत्वमेव गुरुत्वम् , स्तुतिरेव निन्दा, निन्दैव स्तुतिः, नतिरेव परमोन्नतिः, व्यय एव लाभः, विस्मरणमेव स्मरणम् , अगर्वत्वमेव सगर्वत्वम् , सकामत्वमेव अकामत्वम् , रविरेव चन्द्रः, चन्द्र एव रविः, असन्त एव सन्तः, असतीत्वमेव सतीत्वम् , सतीत्वमेवासतीत्वम् , अकीर्तिरेव कीर्तिः, निग्रह एव अनुग्रहः व=अकवय एव कवयः, शिष्या एव गुरवः इत्यादिविपरीतो व्यवहारवारः कविना सोदाहरणमुपन्यस्तः ।

प्रथममिदमत्र विचारणीयम्—प्रेमपत्तनं किम् ?. मधुरमेचकः कः ? रतिश्च केति ?

यद्यपि संक्षिप्तेनामुना कथांशेन प्रेमपत्तनं वृन्दावनम् , मधुरमेचको नवनीरदवपुः शृंगारसारो भगवान् व्रजेश्वरः । रतिर्महाभावाङ्कुररूपा परमपुरुषप्रेयसी श्रीराधैवेति सामान्यतः पाठकवृन्देनानायासे-

कृष्णमन्त्रोपासकाश्च भारतस्थाश्च वैष्णवाः ।
एभिर्दृष्टश्च गोलोको नान्यैर्दृष्टः कदाचन ॥
ब्र० वै० अ० ५४।१५४-१५६

नाधिगतं भवेत्। तथापि प्रेमपत्तनस्य कथं गगने स्थितिः, कश्च तन्महिमा, किमाकारं तत्? भगवतो वासुदेवस्य कीदृगस्ति स्वरूपम्, किंमाहात्म्यम्, कास्तस्य वल्लभाः, के पार्षदाः। ह्लादिनीसारसंविद्रूपाया रतेर्महिमा कीदृश इति विशेषतो जिज्ञासा सर्वसाधारिणी प्रकृतग्रन्थसम्पादनवेलायां मयाप्यनुभूता। अतोऽत्रैतत्सम्प्रदायग्रन्थेभ्यः पुरावृत्तेभ्यश्च यत्किञ्चिदधिगतं तदभिधीयते—

## प्रेमपत्तनम्—

अनेककोटिब्रह्माण्डभाण्डोपरि वर्त्ततेऽमन्दानन्दमयमाश्चर्यचर्यापरिकलितं मञ्जुलवञ्जुलादिनिकुञ्जललितं मन्दारमरन्दविन्दुवृन्दाञ्चितं सुरभिसन्दोहशोभितं नमस्यानामपि नमस्यं परमरहस्यं विविधैश्वर्यपरम्परानिचितं नृत्यगीतनिरन्तरं स्थानमूर्द्धन्यं वृन्दावनं नाम। तदुक्तं पाद्मे—

गुह्याद् गुह्यतरं पुण्यं परमानन्दकारणम्।
अत्यद्भुतं रहःस्थानं रहस्यं परमं पदम्॥
सात्वतां स्थानमूर्द्धन्यं विष्णोरत्यन्तदुर्लभम्।
नित्यं वृन्दावनं नाम ब्रह्माण्डोपरि संस्थितम्॥
तत्र कैशोरवयसं नित्यमानन्दविग्रहम्।
गीतनाट्यकथालापं स्मितवक्त्रं निरन्तरम्॥
शुद्धसत्त्वैः प्रेमपूर्णैर्दृष्टं वै तद्वनाश्रयैः।
पूर्णब्रह्मसुखे मग्नैः स्फुरत्तन्मूर्त्तितन्मयम्॥
भुजंगशत्रुनृत्याढ्यं सकलामोदविभ्रमम्।
नानावर्णैश्च कुसुमैस्तद्रेणुपरिपूरितम्॥
पूर्णेन्दुनित्याभ्युदयं सूर्यमन्दांशुसेवितम्।
अदुःखं दुःखविच्छेदं जरामरणवर्जितम्॥
अक्रोधं गतमात्सर्यमभिन्नमनहंकृतम्।
पूर्णानन्दामृतरसं पूर्णप्रेमसुखार्णवम्॥

गुणातीतं महद्धाम पूर्णप्रेमस्वरूपकम् ।
यत्र वृक्षादिपुलकैः प्रेमानन्दाश्रुवर्षितम् ॥
किं पुनश्चेतनायुक्तैर्विष्णुभक्तैः किमुच्यते ।
गोविन्दाङ्घ्रिरजःस्पर्शात् नित्यं वृन्दावनं भुवि॥
सहस्रदलपद्मस्य वृन्दारण्यं वराटकम् ।
यस्य स्पर्शनमात्रेण पृथ्वी धन्या जगत्त्रये ॥
गुह्याद्गुह्यतमं रम्यं मध्यं वृन्दावनं भुवि ।
अक्षरं परमानन्दं गोविन्दस्थानमव्ययम् ॥
गोविंददेहतोऽभिन्नं पूर्णब्रह्मसुखाश्रयम् ।
मुक्तिस्तत्र रजःस्पर्शात्तन्माहात्म्यं किमुच्यते ॥

जितमिति स्तोत्रेऽपि—

लोकवैकुण्ठनामानं दिव्यसाड्गुण्यसंयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥
नित्यसिद्धैः समाकीर्णं त्वन्मयैः पाञ्चकालिकैः ।
सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभम् ॥
वापीकूपतडागैश्च वृक्षषण्डैः सुमण्डितम् ।
अप्राकृतं सुरैर्वंद्यमयुतार्कसमप्रभम् ॥
प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा ।
क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशवम् ॥

इदमत्र तत्त्वम्—इति प्रकृत्य सिद्धान्तरत्ने वलदेवविद्याभूषणे-रप्यवाचि—

"अनन्तविज्ञानानन्दवपुषो भगवतः स्वचिच्छक्तिविलासमयं प्रकृतिस्पर्शशून्यमपरिच्छिन्नं स्वमहिमसद्व्योमशब्दितं पुरमति-विस्तीर्णबहुभूमप्रसादोपमं चकास्ति । यत्र नानाविर्भावपरिकर-परिच्छदस्वच्छन्दसमावेशोचितान्यतिविशालनीवृन्निलयमयानि निरुप-मशक्रनीलकुरुविन्दचन्द्रकान्तादिकान्तानि विचित्रप्राचीरचत्वरप्रासा-दादिमदावासानि मणिचित्रतटाकपीयूषपूर्णसरित्सरोवापीकूपानि

कर्पूरपूरायमाणरजांसि प्रतिक्षणसमुल्लासतरुवल्लीगुल्मानि रम्यविहङ्गादिसत्त्वसंदोहानि कमनीयविमानावलिवियन्ति धामानि स्फुरन्ति। येषु परमालौकिकरूपसम्पन्ना मुक्ता नित्यमुक्ताश्च सर्वाभ्यर्हितत‌तया श्रीदेव्या सह विविधविनोदवन्तं नानाविधैरुपचारैरनुकूलयन्ति" इति।

पाञ्चरात्रेऽपि—

विष्वद्रीच्येव वाग् वेदा अद्रयः कनकाद्रयः।
जलं ब्रह्मद्रवः साक्षाद् द्रुमाः सर्वे सुरद्रुमाः॥
जनाः परिजना यत्र धेनवः कामधेनवः।
श्रीमद्वृन्दावनस्यान्तः प्रदेशो रतिराज्यभूः॥

प्रेमपत्तनटीकायामपि—

'तन्नगरं च लीलापरिकरात्मकनित्यसिद्धासंक्तजननिवासस्थानं श्रीवृन्दावनान्तर्मण्डलमेव।' 'भगवतः प्रकाशविशेषे वृन्दावने वनं मेदेहरूपकम्' इत्युक्तम्।

चैतन्यचरितामृते च—

प्रकृतिर पार पर व्योम नाम धाम।
कृष्णविग्रह ये छे विभुत्वादि गुणवान्॥
सर्वग, अनन्त ब्रह्म वैकुण्ठादि धाम।
कृष्ण कृष्ण अवतारेर ताहाइ विश्राम॥
ताहार उपरि भागे कृष्णलोक ख्याति।
द्वारका मथुरा गोकुल त्रिविधत्वे स्थितिः॥
सर्वोपरि श्रीगोकुल व्रजलोक धाम।
श्रीगोलोक श्वेतद्वीप वृन्दावन नाम॥
सर्वग अनन्त विभु कृष्ण तनु सम।
उपर्यधो व्यापिया छे नाहिक नियम॥
ब्रह्माण्डे प्रकाश तार कृष्णेर इच्छाय।
एकइ स्वरूप ताँर नाहि दुइ काय*॥

* मूलसंस्कृतपुस्तकालाभे वङ्गभाषामयाच्चैतन्यचरितामृतादुद्धृतमिदम्।

अन्यत्रापि—

"प्राकृते प्रलयं प्राप्ते व्यक्तेऽव्यक्तं गते पुरा।
शिष्टे ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे॥
ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः।
निर्गुणोऽनाद्यनन्तश्च वर्त्तते केवलेऽक्षरे॥
अक्षरं परमं ब्रह्म वेदानां स्थानमुत्तमम्।
तल्लोकवासी हि जनः स्तुतो वेदैः परात्परः॥
चिरं स्तुत्या ततस्तुष्टः परोक्षः प्राह तान् गिरा।
तुष्टोऽस्मि ब्रूत भोः प्राज्ञा वरं यन्मनसेप्सितम्॥

श्रुतय ऊचुः—

ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम्।
वाङ्मनोगोचरातीतं ततो न ज्ञायते तु यत्॥
आनन्दमात्रमिति यद्वदन्तीह पुराविदः।
तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः॥
श्रुत्वैतद् दर्शयामास स्वं लोकं प्रकृतेः परम्।
केवलानुभवानन्दमात्रमक्षरमव्ययम्॥
यत्र वृन्दावनं नाम वनं कामदुघैः द्रुमैः।
मनोरमं निकुञ्जाढ्यं सर्वर्तुरससंयुतम्॥
यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः।
रत्नधातुमयः श्रीमान् सुपक्षिगणसङ्कुलः॥
यत्र निर्मलपानीया कालिन्दी सरितां वरा।
रत्नबद्धोभयतटी हंसपद्मादिसङ्कुला॥
नानारासरसोन्मत्तं यत्र गोपीकदम्बकम्।
तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः॥
दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः।
दृष्टो मदीयो लोकोऽयं यतो नास्ति परं पदम्॥"

इत्यादि।

श्रीगोस्वामिकडचायामपि—

"मायातीते व्यापिवैकुण्ठलोके
पूर्णैश्वर्ये श्रीचतुर्व्यूहमध्ये ।
रूपं यस्योद्भाति..............' इत्यादि ।

वैकुण्ठांशिरूपस्य सर्वोपरिविराजमानस्य तन्नगरस्य कथमवनितलेऽवस्थितिरिति शङ्का न कार्य्या, "यत्र यत्र भगवानवतरति तत्र तत्रांशेन पूर्णस्वरूपेण च वैकुण्ठमवतरति, तत्र तद्वनं चायात्येव इति शास्त्रे प्रसिद्धमिति प्रेमपत्तनटीकायामुक्तेः । यथाऽवतारिणो भगवतः 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्यादिवचमचयैः पूर्णस्वरूपेणावतरणं विश्रुतचरम्, तथैव तन्नगरस्याप्यवतार इति न किमप्यासमञ्जस्यम् । तदुक्तं प्रकारान्तरेण स्कान्देऽपि—

"या यथा भुवि वर्तन्ते पुर्य्यो भगवतः प्रियाः ।
तास्तथा सन्ति वैकुण्ठे तत्तल्लीलार्थमादृताः ॥" इति ।

न च तस्य तादृङ् महिमा न सर्वैर्नयनगोचरीक्रियते इति वाच्यम् , भगवद्भक्तिभरभुग्नोत्तमाङ्गा रतेरनुज्ञया तदनुचरैराज्ञप्तप्रवेशा रतिराज्यसीमानमुपगता एव केचन उक्तचरं तन्महिमानं नयनगोचरीकर्तुं शक्नुवन्ति, अन्ये बहिरेव तिष्ठन्तीति पूर्वमुक्तेः । आसु दिव्यत्वास्फूर्तिस्त्वसंस्कृतदशामेव, भगवति नरदारकादिवदिति सिद्धान्तरत्नाच्च । सायुज्यमुक्तिभाजोऽपि भगवच्चरणरतिं विना यत्र गन्तुं न शक्नुवन्ति । तत्र अनासादितभक्तिगन्धानां प्राकृतानां न प्रवेश इति किमाश्चर्यम् । अधुनातना यथाकथञ्चित् प्रविष्टा अपि तादृशदृष्ट्यभावात्प्रपञ्चसदृशमेव तत्पुरं पश्यन्ति—अत एवोक्तं चैतन्यचरितामृते—

चिन्तामणि भूमि कल्पवृक्षमय वन ।
चर्मचक्षु देखें तांरे प्रपञ्चेर मन ॥
प्रेमनेत्र देखें तांर स्वरूपप्रकाश ।
गोपगोपी सङ्गे जांहा कृष्णेर विलास ॥

ये पुनर्भगवदनुगृहीता भगवति दृढां रतिं बिभ्रति, ते तथैव तन्न-

गरमहिमानं पश्यन्ति। तथाहि म्लेच्छोऽपि यवनकविः भगवत्प्रेमपूर-परिप्लुतस्वान्तो महान् रसखानो वृन्दावनवत्कान्तं त्रिलोक्यामपि नापश्यत् स्थानम्। स्थाने महात्मनस्तस्येदृशी मतिः। भक्तप्रवरः स आह स्मः।

मानुष हौं तो वही रसखान बसौं संग गोकुल गाँव के ग्वारन।
जो पशु हौं तो कहा बसु मेरो चरौं नित नन्द की धेनु मँझारन॥
पाहन हौं तो वही गिरि को जो कियो हरि छत्र पुरन्दर धारन।
जो खग हौं तो बसेरो करौं मिलि कालिन्दि कूल कदम्ब की डारन॥

या लकुटी अरु कामरिया पर राज तिहूँ पुर को तजि डारौं।
आठहुँ सिद्धि नवौ निधि के सुख नन्द कि गाय चराय बिसारौं॥
नैनन सूँ रसखान जवै व्रज के वन बाग तड़ाग निहारौं।
केतिक ही कलधौत के धाम करील के कुञ्जन ऊपर वारौं॥

प्रेमाञ्जनाक्तया दृशा तत्रत्यं करीलनिकुञ्जमपि कलधौतधामतो मञ्जुलं पश्यति। अनेकैः कलधौतधामभिस्तस्य निर्मञ्छनं च करोति। भगवदधिष्ठितमुपवर्णितपूर्वं रत्नेन्द्रसारनिर्मितं मन्दिरं केन निर्मञ्छनीकुर्यात्। नैवास्ति ब्रह्माण्डभाण्डोदरे तादृगपूर्वं वस्तु।

भागवतेपि निपुणमुक्तम्—

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः॥

इति॥

## मधुरमेचकः—

मधुरः श्रृङ्गाररसमयोऽत एव मेचकः श्यामसुन्दरतनुर्भगवान् श्रीकृष्ण इति प्रकृतग्रन्थव्याख्यामातन्वताऽद्भुतेन तस्य श्रृङ्गारमयत्वञ्च "श्रृङ्गारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति" 'श्रृङ्गारसारसर्वस्वम्' इति जयदेवबिल्वमङ्गलोक्तिप्रमाणद्वयमुद्धृत्य मधुरमेचकपदेन भगवान् श्रीकृष्ण एवात्र विवक्षित इति स्पष्टीकृतम्।

मत्स्यकूर्मवराहादयोऽशावतारा यस्यांशाः कृत्स्नशक्तिव्यञ्जी अंशिरूपी स भगवान् अस्ति तन्नगरस्याधिपतिः। सर्वत्र पदे पदे विततोऽस्ति तस्य महिमा, कः खलु तं वक्तुं शक्नोति साकल्येन। अत्र यद्यपि—

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश! पारं न याति॥

इयमुक्तिरेवौचितीमावहति। तथापि तन्महिमानं प्रकृत्य किञ्चिद-त्रोच्यते। पाद्मे तावत्—

यदङ्घ्रिनखचन्द्रांशुमहिमान्तो न विद्यते।
तन्माहात्म्यं कियद्देवि! प्रोच्यते त्वं मुदा शृणु॥
अनन्तकोटिब्रह्माण्डे अनन्तत्रिगुणोच्छ्रये।
तत्कलाकोटिकोट्यंशा ब्रह्मविष्णुमहेश्वराः॥
सृष्टिस्थित्यादिना युक्तास्तिष्ठन्ति तस्य वैभवाः।
तद्रूपकोटिकोट्यंशाः कलाः कन्दर्पविग्रहाः॥
जगन्मोहं प्रकुर्वन्ति तदण्डान्तरसंस्थिताः।
तद्देहविलसत्कान्तिकोटिकोट्यंशको विभुः॥
तत्प्रकाशस्य कोट्यंशरश्मयो रविविग्रहाः।
तस्य स्वदेहकिरणैः परानन्दरसामृतैः॥
परमामोदचिद्रूपैर्निर्गुणस्यैककारणैः।
तदंशकोटिकोट्यंशा जीवन्ति किरणात्मकाः॥
तदङ्घ्रिपङ्कजद्वन्द्वनखचन्द्रमणिप्रभा।
आहुः पूर्णब्रह्मणोऽपि कारणं वेददुर्गमम्॥
तदंशसौरभानन्तकोट्यंशो विश्वमोहनः।
तत्स्पर्शपुष्पगन्धादिनानासौरभसम्भवः॥
तत्प्रिया प्रकृतिस्त्वाद्या राधिका कृष्णवल्लभा।
तत्कलाःकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः॥

तस्या अङ्घ्रिरजःस्पर्शाद् विष्णुकोटिः प्रजायते। इति।

भक्तानन्दविवृद्धिदो भगवान् श्रीकृष्ण एवास्ति मुख्यं भगवतत्त्वम्। अन्ये मत्स्यकूर्मादयोऽवतारा अकृत्स्नशक्तिव्यञ्जिनस्तस्य विलासांश-कलापदेनाभिधीयन्ते। अत एवोक्तं भागवते—

'एते चांशकलाः पुंसः कृष्णास्तु भगवान् स्वयम्।'

'अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल॥' इत्यादि।

केचिद् वदन्ति तस्यांशं ब्रह्म चिद्रूपमव्ययम्।

तद्दशांशं महाविष्णुं प्रवदन्ति मनीषिणः॥

इति चान्यत्रापि। एषास्य महिम्नो दिक्।

न तस्य प्राकृता मूर्तिर्मेदोमज्जास्थिसंभवा॥

स योगित्वादीश्वरत्वात् सत्यरूपोऽच्युतो विभुः।

सौन्दर्यसारसर्वस्वस्य माधुर्य्यैकसस्तस्य सौन्दर्यमाधुर्ये अपि वर्णनातीते। अत एव स भगवान् माधुर्यनिधिस्तमपरिकलितपूर्वं स्वं माधुर्यपूरं मणिमुकुरे प्रतिविम्वगतं विलोक्य राधिकेव सरभ-समुपभोक्तुं कामयते। उक्तश्चात्र विषये—

माधुर्य्यैको नाधुना वर्णनीयं रूपं यूनोरीहते यत्समीक्ष्य।

रत्नादर्शे हन्त कृष्णः सतृष्णं राधाभावं राधिका कृष्णभावं॥ इति।

प्रणतपटलीनां मधुरिम्णो गोपाङ्गनानामेकीभूतप्रेम्णो विनर्यासस्य तस्य माधुर्यं वर्णनातीतमिति किमत्र चित्रम्। तस्य नामाक्षरयोरपि यन्माधुर्यमनुभवन्ति सन्तरतस्य तुला नास्ति लोकत्रयेऽपि। अत्र विषये पण्डितराजजगन्नाथमहोदयानामियं पदावली नृत्यति सर्वेषां रसनारङ्गे—

मृद्वीका रसिता सिता समशिता स्फीतं निपीतं पयः।

स्वर्यातेन सुधाप्यधायि कतिधा रम्भाधरः खण्डितः॥

सत्यं ब्रूहि मदीयजीव! भवता भूयो भवे भ्राम्यता।

कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः॥

अलं पल्लवितेन।

## रतिः—

रतिस्तु तस्यैव भगवतो ह्लादिनीशक्तिः श्रीराधिकैव। उक्तं श्री-गोस्वामिकडचायाम्।

"राधा कृष्णप्रणयविकृतिर्ह्लादिनीशक्तिरस्माद्।
एकात्मानावपि भुवि परं देहभेदं गतौ तौ" ॥ इति

चैतन्य चरितामृते तु ह्लादनीतोऽप्युत्कृष्टतमत्वं तस्या उक्तम्—

कृष्णे भगवत्ता ज्ञानसंवितेर सार।
ब्रह्मज्ञानादिक' सब तार परिवार॥
ह्लादिनीर सार प्रेम प्रेम सार भाव।
भावेर परम काष्ठा नाम महाभाव॥
महाभावस्वरूपा श्रीराधा ठाकुरानी।
सर्वगुणखनि श्रीकृष्णकान्ता शिरोमनी॥

एतदेवाभिप्रेत्य प्रेमपत्तनटीकायाम्—

"रतिस्तु रसपक्षे तत्स्थायिभावाख्या, श्रीकृष्णपक्षे महाभावस्वरूपा श्रीराधैव, 'महाभावस्वरूपेयम्' इत्युक्तेः। रतेर्महाभावाङ्कुररूपत्वात् कार्यकारणयोरभेदोक्त्या रतिः श्रीराधैवेति व्याख्यातम्। तदासक्त्या मधुरैमेचकेन निजैश्वर्यं विस्मृतमिति समस्तग्रन्थविवक्षितम्" इति।

उज्ज्वलनीलमणौ च—

तयोरप्युभयोर्मध्ये राधिका सर्वथाधिका।
महाभावस्वरूपेयं गुणैरतिवरीयसी॥" इति

वृहद्गोतमीयतन्त्रेऽपि—

देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहनी परा॥

श्री ब्रह्मसंहितायामपि—

आनन्दचिन्मयरसप्रतिभाविताभि-
स्ताभिर्य एव निजरूपतया कलाभिः॥

गोलोक एव निवसत्यखिलात्मभूतो
गोविन्दमादिपुरुषं तमहं भजामि ॥

तस्या महाभावस्वरूपता पद्यैरेभिः स्फुटं परिचीयते । पाद्मादिषु पुराणेषु पदे पदे सा समुपवर्णितास्ति, अधिकं तत्रैवावलोकनीयमिति ।

एतत्सर्वं स्पष्टं विशदयितुं पौराणिकं किञ्चिदत्र प्रस्तूयते—पौराणिकास्तावदामनन्ति *—परमात्मा, नभो, दिशः, कालः, विश्वगोलः, गोलोकः, प्रकृतिरिति सप्त तत्त्वानि सन्ति नित्यानीति । सदातने गोलोके प्रकृतिसहचरो भगवानादिपुरुष एव प्रथममास । प्रकृतिश्च नासीत्ततो भेदवती । सा हि वह्नौ दाहिका शक्तिरिव, इन्दावभिख्येव, प्रभाकरे प्रभेव परमात्मन्यभेदेन तिष्ठति । प्रकृतिर्हि सर्वशक्तिस्वरूपा तया सहितः परमात्मा शक्तिमानभिधीयते । सैव भगवती तया युतो भगवानुच्यते । स्वेच्छामयोऽसौ देवः साकारो निराकारश्च विद्यते । योगिनस्तं तेजोरूपं निराकारं पश्यन्ति, वैष्णवास्तु तेजस्विनमन्तरेण कस्य तेज इति विप्रतिपत्तिं प्रदर्श्येत्थं भगवन्तं ध्यायन्ति—

तेजोमण्डलमध्यस्थं ब्रह्म तेजस्विनं परम् ।
स्वेच्छामयं सर्वरूपं सर्वकारणकारणम् ॥
अतीवसुन्दरं रूपं बिभ्रतं सुमनोहरम् ।
किशोरवयसं शान्तं सर्वकान्तं परात्परम् ॥
नवीननीरदाभासधामैकं श्यामविग्रहम् ।
शरन्मध्याह्नपद्मौघशोभामोचनलोचनम् ॥
मुक्ताच्छविविनिन्द्यैकदन्तपङ्क्तिमनोरमम् ।
मयूरपिच्छचूडञ्च मालतीमाल्यमण्डितम् ॥
सुनसं सस्मितं कान्तं भक्तानुग्रहकारणम् ।
ज्वलदग्निविशुद्धैकदन्तपङ्क्तिमनोरमम् ॥
द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम् ।
सर्वाधारञ्च सर्वेशं सर्वशक्तियुक्तं विभुम् ॥

* देवीभागवतम्, स्क० ९ अ० २।३ ।

सर्वैश्वर्यप्रदं सर्वस्वतन्त्रं सर्वमङ्गलम् ।
परिपूर्णतमं सिद्धं सिद्धेशं सिद्धिकारकम् ॥
ध्यायन्ते वैष्णवाः शश्वत् देवदेवं सनातनम् ।
जन्ममृत्युजराव्याधिशोकभीतिहरं परम् ॥
वयसो ब्रह्मणा यस्य निमेष उपचर्य्यते ।
स चात्मा स परं ब्रह्म कृष्ण इत्यभिधीयते ॥

एकको न रममाणो द्वितीयमिच्छन् सृष्ट्युन्मुखः स स्वेच्छया द्विधा बभूव । तस्य वामांशो वामारूपः दक्षिणांशश्च पुरुषरूपो बभूव । अथ रासोल्लासे सुरसिको रासेश्वरश्चन्द्रबिम्बवन्ध्यवदनया तया साकं रासमण्डले चिरं चिक्रीड । क्रीडावसाने परिश्रान्तो जगत्पिता तस्यां वीर्य्यमाधत्त । तदा श्रान्तिमुपगतायास्तस्याः श्रमजलेन विश्वगोलकं सकलं परिपूर्णमभवत् ।

एवं गर्भमाधाय सा भगवती कृष्णचिच्छक्तिर्मन्वन्तरशतं कृष्ण-तेजसा जाज्वल्यमाना सुषाव स्वर्णाभमतिपृथुलं डिम्भमेकम् । तादृशं विपुलाकारं तमलोक्य दूयमानमानसा सा सलिलाप्लुते विश्वगोलके तं निचिक्षेप । तस्य त्यागं दृष्ट्वा हा हेति प्रलपन् भगवान्—

यतोऽपत्यं त्वया त्यक्तं कोपशीले ! च निष्ठुरे ! ।
भव त्वमनपत्यापि चाद्यप्रभृति निश्चितम् ॥
या यास्त्वदंशरूपाश्च भविष्यन्ति सुरस्त्रियः ।
अनपत्याश्च ताः सर्वास्त्वत्समा नित्ययौवनाः ॥ इति देवीं शशाप । तस्मिन्नेवासरे देव्यास्तस्या जिह्वाग्रात् शुद्धस्फटिकसं-काशा कन्यकैका समजनि । अथ सा कृष्णप्राणाधिदेवी द्विधा संजाता । तस्यावामार्द्धं कमलालयारूपेण परिणतं दक्षिणार्द्धञ्च राधिकारूपेण । कृष्णोऽपि द्विधा समभवत्—दक्षिणार्द्धो द्विबाहुः, वामार्द्धनश्चतुर्बाहु-रिति । देव्या जिह्वाग्रादुत्पन्नां शारदां कमलालयाञ्च कृष्णश्चतुर्बाहवे विष्णवे प्रादात् । विष्णुश्च ते समादाय वैकुण्ठमगच्छत् । रासेश्वरी तु गोलोकाधिपतेः श्रीकृष्णस्य सन्निधिमलङ्कृतवती । वैकुण्ठं

गतवतो भगवतो नारायणस्याङ्गात् सहस्रशः पार्षदाः संबभूवुः, कमलालयाङ्गाच्च कोटिशो न्यक्कृताऽप्सरसो दास्यः। तथैव गोलोक-मण्डनस्य कृष्णस्य लोम्नां विवरतो वयसा तेजसा च समा असंख्या गोपाः सञ्जाताः, राधायाश्च रोमकूपेभ्यो रूपेण वयसा च तत्समा गोपकन्यकाः। सर्वा अपि ता रत्नभूषणभूषिताः सुस्थिरतारुण्यो मञ्जुभाषिण्यो राधातुल्या आसन्।

स किल प्रक्षिप्तोऽर्भकः ब्रह्मवयोमितकालपर्यन्तं जले तिष्ठन् द्विधाऽभवत्। तन्मध्ये शतकोटिरविप्रभः क्षुधापीडितो रोरूयमाणः शिशुरदृश्यत॰। मातापितृभ्यां परित्यक्तोऽसंख्यब्रह्माण्डनाथोऽप्यसा-वनाथवदूर्ध्वमपश्यत्। स्थूलादपि स्थूलतमः स एव विराडनाम्ना प्रथितिमुपगतः। स खलु विराट् भगवतः श्रीकृष्णस्य षोडशांशोऽस्ति। सर्वविच्च राधाप्रकृतेरुत्पन्नत्वात् प्राकृतो महाविष्णुरभिधीयते। अस्य प्रत्येकं लोमकूपेषु सन्ति अनेके क्षुद्राः विराजः। तेषां संख्यां कृष्णोऽपि नहि वक्तुं क्षमः। तत्तत्क्षुद्रब्रह्माण्डस्थानां ब्रह्मविष्णुशिवादीनामपि नास्ति संख्या। पातालाद् ब्रह्मलोकपर्यन्तमभिधीयते ब्रह्माण्डम्। तत्र सन्त्यनेके लोकास्तेषामुपरि विद्यते वैकुण्ठं विष्णोर्धाम। तच्च ब्रह्माण्डात् बहिर्वर्ति नित्यमप्राकृतश्चास्ति। तदुपरि विराजते सदातनो गोलोकः। कृष्णवदपारमहिमशालिनस्तस्य महिमा विद्यते तावद् वाचामविषयः।

सोऽयं गोलोकः तस्य मार्गश्च स्कन्दपुराणे इत्थमुपवर्णितः—

मेरुशृङ्गं समारूढो नारदो दिव्यया दृशा।
श्वेतद्वीपं च तत्रस्थान् पश्यन्मुक्तान् सहस्रशः॥
वासुदेवे भगवति दृष्टिमाबध्य तत्क्षणम्।
उत्पपात महायोगी सद्यः प्राप च धाम तत्॥
प्राप्य श्वेतं महाद्वीपं श्वेतान् चन्द्रप्रभान् शुभान्।
पूजयामास शिरसा मनसा तैश्च पूजितः॥
दिदृक्षुर्ब्रह्म परमं स च कृच्छ्रपरः स्थितः।
भक्तमेकान्तिकं विष्णोर्बुद्ध्वा भागवतास्तु ते॥

तमूचुस्तुष्टमनसो जपञ्च द्वादशाक्षरम् ।

श्वेतमुक्ता ऊचुः—

मुनिवर्य्य ! भवान् भक्तः कृष्णस्यास्ति यतोऽत्र नः ।
दृष्टवान् देवदुर्दर्शान् किमिच्छन्नथ तृप्यसि ॥

नारद उवाच—

भगवन्तं परं ब्रह्म साक्षात्कृष्णमहं प्रभुम् ।
द्रष्टुमुत्कोऽस्मि भक्तेन्द्रास्तं दर्शयत तत्प्रियाः ॥

स्कन्द उवाच—

तदैकः श्वेतमुक्तस्तु कृष्णेन प्रेरितो हृदि ।
एहि ते दर्शये कृष्णमित्युक्त्वा पुरतोऽभवत् ॥
प्रहृष्टो नारदस्तेन साकमाकाशवर्त्मना ।
पश्यन् धामानि देवानां तत ऊर्ध्वं ययौ मुनिः ॥
सप्तर्षींश्च ध्रुवं दृष्ट्वाऽनासक्तः कुत्रचित्स च ।
महर्जनतपोलोकान् व्यतीयाय द्विजोत्तमः ॥
ब्रह्मलोकं ततो दृष्ट्वा श्वेतलोकानुगो मुनिः ।
कृष्णस्यैवेच्छयाऽध्वानं प्रापाष्टावरणेष्वपि ॥
भूम्यप्तेजोऽनिलाकाशाहम्महत्प्रकृतीः क्रमात् ।
क्रान्त्वा दशोत्तरगुणा प्राप गोलोकमद्भुतम् ॥
धाम तेजोमयं तद्धि प्राप्यमेकान्तिकैर्हरेः ।
गच्छन् ददर्श विततामगाधां विरजां नदीम् ॥
गोपीगोपगणस्नानधौतचन्दनसौरभाम् ।
पुण्डरीकैः कोकनदैरम्यामिन्दीवरैरपि ॥
तस्यास्तटं मनोहारि स्फटिकाश्ममयं महत् ।
प्राप श्वेतहरिद्रक्तपीतसन्मणिराजितम् ॥
कल्पवृक्षालिभिर्जुष्टं प्रवालाङ्कुरशोभितम् ।
स्यमन्तकेन्द्रनीलादिमणीनां खनिमण्डितम् ॥

नानामणीन्द्रनिचितसोपानततिशोभितम् ।
कूजद्भिर्मधुरं जुष्टं हंसकारण्डवादिभिः ॥
वृन्दैः कामदुघानाञ्च पिबन्तीनां जलं शुभम् ।
उत्तीर्याथ धुनीं दिव्यां तत्क्षणादीश्वरेच्छया ॥
तद्धामपरिखाभूतां शतशृङ्गामवाप सः ।
हिरण्मयं दर्शनीयं कोटियोजनमुच्छ्रितम् ॥
विस्तारे दशकोट्यस्तु योजनानां मनोहरम् ।
सहस्रशः कल्पवृक्षैः पारिजातादिभिर्द्रुमैः ॥
मल्लिकायूथिकाभिश्च लवङ्गैलालतादिभिः ।
स्वर्णरम्भादिभिश्चान्यैः शोभमानं महीरुहैः ॥
दिव्यैर्मृगगणैर्नागैः पक्षिभिश्च सुकूजितैः ।
दुर्गायितस्य तद्धाम्नस्तस्य रम्येषु सानुषु ॥
मनोज्ञान् विततानैक्षत् भगवद्रासमण्डपान् ।
वृतानुद्यानततिभिः फुल्लपुष्पसुगन्धिभिः ॥
कपाटै रत्ननिचितैश्चतुर्द्वारसुशोभनान् ।
चित्रतोरणसम्पन्नैः रत्नस्तम्भैः सहस्रशः ॥
जुष्टांश्च कदलीस्तम्भैर्मुक्तालम्बैर्वितानकैः ।
दूर्वालाजाक्षतफलैर्युक्तान्माङ्गलिकैरपि ॥
चन्दनागरुकस्तूरीकेसरोक्षितचत्वरान् ।
सुश्राव्यवादनिनदैर्हृद्यान् बहुविधैरपि ॥
तेषु यूथानि गोपीनां कोटिशः स ददर्श ह ।
अनर्घ्यवासोभूषाभिः सद्रत्नमणिकङ्कणैः ॥
काञ्चीनूपुरकेयूरैः शोभितान्यङ्गुलीयकैः ।
तारुण्यरूपलावण्यैः स्वरैश्चाप्रतिमानि हि ॥
राधालक्ष्मीसवर्णानि शृङ्गारिककराणि च ।
भोगद्रव्यैर्बहुविधैर्मण्डपेषु युतेषु च ॥
विलसन्ति च गायन्त्यो मनोज्ञाः कृष्णगीतिकाः ।

उपत्यकासु तस्याद्रेरथ वृन्दावनाभिधम् ॥
कृष्णस्य राधिकायाश्च प्रियं तत्क्रीडनस्थलम् ।
कल्पद्रुमालिभी रम्यं सरोभिश्च सपङ्कजैः ॥
मल्लिकामाधवीकुन्दैर्लवङ्गैर्यूथिकादिभिः ।
मन्दशीतसुगन्धेन सेवितं मातरिश्वना ॥
दधिमन्थनशब्दैश्च सर्वतो नादितं मुने ! ।
तद्वीक्ष्य हृष्टः स प्राप गोलोकपुरमुज्ज्वलम् ॥
वर्तुलं रत्नदुर्गञ्च राजमार्गोपशोभितम् ।
राजितं कृष्णभक्तानां विमानैः कोटिभिस्तथा ॥
रथै रत्नेन्द्रखचितैः किङ्किणीजालशोभितैः ।
महामणीन्द्रनिकरै रत्नस्तम्भालिमण्डितैः ॥
अद्भुतैः कोटिशः सौधैः पङ्क्तिसंस्थैः मनोहरम् ।
विलासमण्डपै रम्यै रत्नसारविनिर्मितैः ॥
रत्नेन्द्रदीपततिभिः शोभितं रत्नवेदिभिः ।
केसरागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥
श्रीकृष्णदर्शनायातैर्नैकब्रह्माण्डनायकैः ।
विरञ्चिशङ्कराद्यैश्च बलिहस्तैः सुसङ्कुलम् ॥
व्रजद्भिः कृष्णवीक्षार्थं गोपगोपीकदम्बकैः ।
सुसङ्कुलमहामार्गं मुमोदालोक्य तन्मुनिः ॥
कृष्णमन्दिरमापाऽथ सर्वाश्चर्यं मनोहरम् ।
नन्दादिवृषभान्वादिगोपसौधालिभिर्वृतम् ॥
चतुर्द्वारैः षोडशभिः दुर्गैः सपरिखैर्युतम् ।
कोटिगोपवृतैकैकद्वारपालसुरक्षितैः ॥
रत्नस्तम्भकपाटेषु द्वार्षु स्वाग्रस्थितेषु सः ।
उपविष्टान् क्रमेणैव द्वारपालान् ददर्श ह ॥
वीरभानुं चन्द्रभानुं सूर्यभानुं तृतीयकम् ।
वसुभानुं देवभानुं शक्रभानुं ततः परम् ॥

रत्नभानुं सुपार्श्वं च विशालमृषभं ततः ।
अंशुं बलं च सुबलं देवप्रस्थं वरूथपम् ॥
श्रीदामानं च नत्वाऽसौ प्रविष्टोऽन्तस्तदाज्ञया ।
मह्याचतुष्के वितते तेजोऽपश्यद् महोच्चयम् ॥
तत्त्वेककालसम्भूतकोटिकोट्यर्कसन्निभम् ।
दिशश्च विदिशः सर्वा ऊर्ध्वाधो व्याप्नुवच्च यत् ॥
कृष्णस्यानुग्रहो यस्मिन् स तेजसि समीक्षते ।
केवलं तेज एवान्ये पश्यन्ति न तु तं मुने ॥
तस्मिन् ददर्शाद्भुतदिव्यमन्दिरं विचित्ररत्नेन्द्रमयं मनोज्ञम् ।
सिंहासनं तत्र मणीन्द्रसारै रत्नेन्द्रसारैश्च विनिर्मितं सः ॥
आश्चर्यकृत् प्रेक्षकमानसानां दिव्यं मुनिः प्रैक्षत भूरिहर्षः ।
तत्राथ कृष्णं भगवन्तमैक्षन्नारायणं निर्गुणमास्थितं सः ॥
सर्वज्ञमीशं पुरुषोत्तमं च यं वासुदेवं च वदन्ति सात्वताः ।
यं केचिदाहुः परमात्मसंज्ञं केचित् परं ब्रह्म परात्परञ्च ॥
ब्रह्मेति केचिद् भगवन्तमेके विष्णुं च भक्ताः परमेश्वरञ्च ।
कन्दर्पसाहस्रमनोहराङ्गं सदा किशोरं करुणानिधानम् ॥
अतिप्रशान्ताकृतिदर्शनीयं क्षराक्षरेभ्यश्च परं स्वतन्त्रम् ।
नैकाण्डसर्गस्थितिनाशलीलाविधायकापाङ्गनिरीक्षकञ्च ॥
अनेककोट्यण्डमहाधिराजं विश्वैकवर्यं नटवर्यवेषम् ।
नवीनजीमूतसमानवर्णं कर्णोल्लसत्सन्मकराभकुण्डलम् ॥
निजाङ्गनिर्यत्सितभूरितेजश्चयावृतत्वात् सितवर्णमुक्तम् ।
निनादयन्तं मधुरं च वेणुं कृत्वा मुखाग्रेऽम्बुजचारुदोर्भ्याम् ॥
जयासुशीलाललितामुखानां वृन्दैः सखीनां सह राधया च ।
समर्च्यमानं रमया च भामाकलिन्दजाजाम्बवतीमुखानाम् ॥
धर्मेण वेदैरखिलैर्भगैश्च ज्ञानादिभिः संयतपाणियुग्मैः ।
निषेव्यमाणं च सुदर्शनाद्यैर्निजायुधैर्मूर्तिधरैरनेकैः ॥
मसारमाणिक्यसुवर्णवर्णैः सितैश्च केचिन्निजपार्षदाग्र्यैः ।

उपासितं चक्रगदाब्जशाङ्गलसद्भुजैर्नन्दसुनन्दमुख्यैः ॥
श्रीदाममुख्यैरथ गोपवेषैर्भक्त्यानवम्रैर्द्विभुजैरनेकैः ।
उपास्यमानं गरुडेन चाग्रतो विभूतिभिश्चाष्टभिरानताभिः ॥
दृष्ट्वा तमत्यद्भुतदिव्यमूर्तिं तद्रूपसौरभ्यहृताखिलेन्द्रियः ।
आनन्दवारिप्रतिरुद्धदृष्टिः प्रेम्णोर्ध्वरोमा सुखसंभृतोऽभूत् ॥
दण्डवत् तं नमस्कृत्य नारदः प्रेमविह्वलः ।
वद्धाञ्जलिपुटस्तस्थौ वीक्षमाणस्तदाननम् ॥ इत्यादि ।
[ स्कन्द० पु० वासुदेवमहात्म्यम् , अ० १५।१६ ]

पुराणांशानिमाननुसृत्यैव रचितं प्रेमपत्तनकथामुखमिति स्पष्टमनेन प्रतीयते । इति ।

## समन्वयः

अत्र पुनः पुनः पुराणादिवचनचयमुद्धृत्य प्रेमपत्तनपरिचये यत्नमादधतामस्माकमिदमस्ति तात्पर्यम्—यदस्मिन् प्रस्तुते पुस्तके—यत्राऽधर्म एव धर्मः, यत्राऽविनय एव विनयः, यत्राऽनाचार एवाचारः, यत्रासत्यमेव सत्यम् , यत्रासतीत्वमेव सतीत्वम् ,—इत्यादीनामापाततोऽनाचारप्रतिपादकानामिव वचसामस्ति भूयस्त्वम् । अवलोक्य तानि वचांसि कश्चित् पेशलप्रतिपदिदं नाकलयेद् यदनाचारप्रचारकमिदम्पुस्तकमिति । विपरीतभावनामिमां निरसितुं कीदृक् तत्पत्तनं कीदृशाश्च तत्रत्या गुणवर्जिता जना इति परीक्षणमावश्यक कोटितामाटीकत । अत एव तदनुष्ठितमस्माभिः । तत्र ज्ञातमाम्रेडितं क्षन्तव्यं मनीषिभिः ।

इदानीमिदमत्र विचारणीयम्—यतः पूततरं लोकान्तरं नास्ति, तादृशे पूर्वमुपवर्णिते आनन्दमयेऽतिशयपुण्यविपाकजेन भगवदनुग्रहेण कृतवसतीनां गुणत्रयवर्जितानां जनानामाचारानाचाररीतिरस्मत्साधारणी न वेति । नास्त्येवास्मत्साधारणीति सकलजन-

प्रसिद्धम्; शास्त्रेषु च बहुशो यत्र तत्र समुद्घोषितम्। अत्रेदं निदानम्—यत् पदं लब्धुमनुष्ठीयते धर्मः, सेव्यते सदाचारः, विनयसत्यवचनत्वादयो गुणाश्चोपार्ज्यन्ते प्राप्ततत्पदानां तु किमवशिष्यते यदर्थं तैस्तत्र यत्नः करणीयः।

निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः। [भागवतम्]

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन!। [गीता]

यदा यस्यानुगृह्णाति भगवानात्मभावितः।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥ [भागवतम्]

अधर्मो धर्मतामेति ह्यादृते परमेश्वरे।
धर्मोऽप्यधर्मतामेति तमनादृत्य भावितः॥

इत्यादिवचनान्यपि तादृशां भगवत्प्रेमपूरपरिप्लुतस्वान्तानां धर्माधर्मबन्धननिर्मुक्तिमानन्ति।

तानेव भगवद्भक्तशिरोमणीनुद्दिश्य गोस्वामिश्रीहरिवंशमहानुभावैरप्यभिहितम्—

कैशोराद्भुतमाधुरीभरधुरीणाङ्गच्छविं राधिकां।
प्रेमोल्लासभराधिकां निरवधि ध्यायन्ति ये तद्धियः॥
त्यक्ताः कर्मभिरात्मनैव भगवद्धर्मैऽप्यहो निर्ममाः।
सर्वाश्चर्यगतिं गता रसमयीं तेभ्यो महद्भ्यो नमः॥

अन्यच्च—

लिखन्ति भुजमूलयोर्न खलु शङ्खचक्रादिकं।
विचित्रहरिमन्दिरं न रचयन्ति भालस्थले॥
लसत्तुलसिमालिका दधति कण्ठपीठे न वा।
गुरोर्भजनविक्रमात् क इह ते महाबुद्धयः॥

रसिकोत्तंसमहाभागेनापि—

प्रौढप्रेममयं भाति यद् व्रजे व्रजवासिनाम्।
अज्ञानं तदभिज्ञानां प्रज्ञानादधिकं मतम्॥

तामवस्थामनुभवद्भिः श्रीमच्चैतन्यमहाप्रभुपादैरपि—

नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो
नो वा वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा ।
किन्तु प्रोद्यन्निखिलपरमानन्दपूर्णामृताब्धे-
र्गोपीभर्त्तुः पदकमलयोर्दासदासानुदासः ॥ इति ।

नेयं सर्वसाधारणी दशा तां भूमिमनारूढाः पद्धतिमिमामनुकुर्वाणा दीपशिखाश्लिष्टस्य पतङ्गस्य विधया नूनं समूलं नश्येयुः । नाप्यनाचारप्रचारगन्धोऽप्यनेनाशङ्क्यो विद्वद्भिः । नूनं सदाचारशिरोमणीनामेषा परिपाकावस्था ।

यथा श्रुतिस्मृतिपुराणप्रतिपादितसदाचाररतानां दार्शनिकसार्वभौमाणां विचारराज्यचक्रवर्त्तिनां मनीषामहाराजानां भगवतामाचार्यवरशङ्करपादानाम्—

न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि ।
.................................
................................. ॥

न माता पिता वा न देवा न लोका
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।
.................................
................................. ॥

इत्यादिपद्यपटलीं दृष्ट्वा आचार्यचरणा वर्णाश्रमाचारधर्मान्नाद्रियन्तेऽतोऽनाचारप्रवर्तकाः, वेदयज्ञादीनामभावमामनन्तो नास्तिका इति न जातुचित् कश्चिदपि विपश्चिदवगच्छति । यतो भगवता कृतब्रह्मसाक्षात्कारं ब्रह्मीभूतं ज्ञानिनमुद्दिश्य तस्यैव पारमार्थिकीमवस्थामभिलक्ष्य न खलु व्यावहारिकीम् , पदावलीयमारचिता, उत्तरार्द्धे सर्वत्र श्लोकेषु "तदेकोऽवशिष्टः शिवः केवलोऽहम्" इति दर्शनात् । अयन्तु पन्थाः शास्त्रेषु शतशः समुद्घोषित एवास्ति ।

तथैवात्राप्यवगन्तव्यम् । सैषा प्रेमपत्तनप्रणाली परां भक्तिमा-

श्रितानां त्रिगुणातीतानां भगवत्प्रेयसामेव, न खलु प्राकृतानामस्मादृशामिति सर्वं समञ्जसम्। अलं पल्लवितेन।

## ग्रन्थकृदाविर्भावकालः

ग्रन्थकृदयं कदाऽवनिमण्डलं मण्डयामासेति मीमांसायां प्रस्तूयमानायां यद्यप्यमुकवत्सरेऽस्य जनुर्जातमिति प्रतिपादयितुं नास्त्यत्र परिस्फुटः कश्चनाधारः, तथापि सन्ति ग्रन्थेऽस्मिन् तेषां बहूनां भक्तशिरोमणीनां सूक्तयः, येषामाविर्भावावसरो नास्ति तिमिरततिविलीनः। ते च तावत् श्रीचैतन्यमहाप्रभुपादाः श्रीरूप-सनातन-जीव गोस्वामिनः श्रीहितहरिवंशगोस्वामिश्रीविश्वनाथचक्रवर्तिप्रभृतयश्च। तेषु श्रीचैतन्यपादानामाविर्भावसमयस्तावत्* (१४८५ A.D.) प्रतिपादितपूर्वः। १५३३ खिस्ताब्दे ४८ वर्षमिते वयसि कीर्तिशेषतां गता इति च वङ्गभाषानिबद्धेन निम्नाम्नातेन चैतन्यचरितामृतपद्येनावसीयते।

श्रीकृष्ण चैतन्य पृथ्वी ते अवतरि।
अष्टचल्लीस ४८ वत्सर प्रकट विहरि॥
चौद्दशतसात १४०७ शाके जन्मेर प्रमाण।
चौद्दशतपञ्चायन्ने १४५५ हइला अन्तर्धान॥

श्रीरूपसनातनावपि तत्समकालिकावेव। प्रचरति जनश्रुतिरेषा यत् श्रीरूपगोस्वामिनां कृतिः विदग्धमाधवं श्रीचैतन्यदेवैः प्रशंसितमिति। विदग्धमाधवसम्पूर्तितिथिस्तदन्ते तैरेव स्वयमालिखिता†। तेन ज्ञायते। तदन्तर्धेरेकवर्षपूर्वं विदग्धमाधवं पूर्तिमुपगतमिति। श्रीसनातनगोस्वामिनस्तावद् रूपाग्रजाः, तेषां बृहद्वैष्णवतोषिणी

---

* शाके मुनिव्योमयुगेन्दु—१४०७—गण्ये शुभोदये फाल्गुनपौर्णमास्याम्।
त्रैलोक्यभाग्योदयपुण्यकीर्तिः प्रभुः शचीनन्दन आविरासीत्॥

† नन्दसिंधुरबाणेन्दु—१५८९—संख्ये संवत्सरे गते।
विदग्धमाधवं नाम नाटकं गोकुले कृतम्॥ [ नि० सा० सं० पृ० २२९ ]

